**वृश्चिकप्रिया** स्त्री वृश्चिकस्य शुककीटस्य प्रिया । पूतिकायाम् शब्दच॰ ।

**वृश्चिककर्णी** स्त्री वृश्चिकस्य कर्ण इव पत्रं यस्याः । आखुकर्ण्याम् राजनि॰ । [भेदे राजनि॰ ।

**वृश्चिका** स्त्री वृश्चिकः तद्विषमस्त्यस्या अच् । (बिछाती) क्षुप-

**वृश्चिकाली** स्त्री वृश्चिक इवालति पर्य्याप्नोति स्पर्शने वेदनायै अच् गौरा॰ ङीष् । (बिछाती) क्षुपभेदे रत्नमा॰ ।

**वृश्चिपत्री** स्त्री वृश्चिक इव पत्रं विषात्मकमस्य पृषो॰ कलोपः ङीप् । वृश्चिकाल्याम् रत्नमा॰ ।

**वृश्चीर** पु॰ व्रश्च-कीरच् । श्वेतपुनर्नवायाम् रत्नमा॰ ।

**वृष** सेचने सक॰ भ्वा॰ पर॰ प्रजननसामर्थ्ये ऐश्वर्य्ये अक॰ सेट् । वर्षति अवर्षीत् । उदित् क्त्वा वेट् ।

**वृष** प्रजननसामर्थ्ये ऐश्वर्य्ये चुरा॰ आत्म॰ सक॰ सेट् । वर्षयते अवीवृषत-अववर्षत ।

**वृष** पु॰ वृष-क । १वृषभे पुङ्गवे अमरः २मेषादितो द्वितीये राशौ ज्यो॰त॰ ३पुरुषभेदे ४एकादशमनुकालीने ५इन्द्रे ६धर्मे गरुडपु॰ ८१अ॰ । ७शृङ्गिमात्रे ८मूषिके ९शुक्रयुक्ते १०वास्तुस्थानभेदे ११वासकवृक्षे मेदि॰ । १२शत्रौ जटा॰ । १३कामे १४बलयुक्ते त्रि॰विश्वः १५ऋषभनामौषधौ राजनि॰ । १६मयूरपिच्छे १७श्रीकृष्णे च त्रिका॰ । वृषराशिश्च २१६०० कलात्मकस्य राशिचक्रस्य १८००कलोपरि १८०० कलात्मकः । कृत्तिकाशेषत्रिपादरोहिणीमृगशिरोऽर्द्धात्मकः स च सौम्यः अङ्गना समः स्थिरः पुष्करांशः चतुष्पाद् निशाख्यः याम्यः दिवारवान् ह्रस्वः दक्षिणदिगीशः रात्रिसंज्ञः पृष्ठोदयः शीतस्वभावः वातप्रकृतिः शुक्रस्वामी श्वेतवर्णः वैश्यजातिः महाशब्दकरः मध्यमस्त्रीसङ्गः मध्यमप्रजश्च” बृहज्ज्या॰ मूलं दृश्यम् । पुरुषविशेषलक्षणञ्च “बहुगुणबहुबन्धः शीघ्रकामो नताङ्गः सकलरुचिरदेहः सत्यवादी वृषो ना” रतिम॰ उक्तम् । १८अरिष्टासुरे स हि वृषाकारेण वृन्दावने गोहनने प्रवृत्तः कृष्णेन हतः । तत्कथा हरिवं॰ ७८अ॰ । वृषस्य शुभाशुभलक्षणं गोलक्षणशब्दे २७१८ पृष्ठादौ दर्शितम् । वृषादि॰आद्युदात्तः ।

**वृषकर्णी** स्त्री वृष इव सुदर्शनः कर्णोऽस्या ङीप् । (सुदर्शन गुलञ्च) ख्यातायां लतायाम् रत्नमा॰ ।

**वृषगन्धा** स्त्री वृषस्य गन्धो लेशो यत्र । वस्तान्त्र्यां राजनि॰ ।

**वृषण** पु॰ वृष-क्यु । १अण्डकोषे अमरः । २वीर्य्यान्विते त्रि॰ । “स्थूललिङ्गो दरिद्रः स्यात् दुःखी कष्टवृषणोभवेत् । विषमे स्त्रीचपलो वै नृपः स्यात् वृषणे समे । प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यो मांसभिर्भवेत्” गरुडपु॰ ६३अ॰ ।

**वृषणश्व** पु॰ कर्म॰ शक॰ । सामर्थ्ययुक्ते इन्द्राश्वे त्रिका॰ ।

**वृषण्वत्** त्रि॰ वृषन्+मतुप् मस्य वः न नलोपः णत्वम् । वर्षणयुते स्त्रियां ङीप् । [पकरणे रथादौ जटा॰ ।

**वृषण्वसु** त्रि॰ वृषा वसु यस्य न नलोपः णत्वम् । इन्द्रस्तो-

**वृषदंशक** पुंस्त्री॰ वृषान् मूषिकान् दशति दन्श-ण्वुल् । विड़ाले अमरः स्त्रियां ङीष् ।

**वृषध्वज** पु॰वृषो वृषभो मूषिको धर्मो वा ध्वजो यस्य । १शिवे अमरः वृषकेतनादयोऽप्यत्र । २हेरम्बे ३पुण्यकर्मयुते च विश्वः । [गौरा॰ ङीष् । नागरमुस्तायाम् ।

**वृषध्वाङ्क्षी** स्त्री वृषो बलवान् ध्वाङ्क्षः काको यस्याः ५त॰ ।

**वृषन्** पु॰ वृष-कनिन् । १इन्द्रे २कर्णे ३दुःखे ४वेदनाख्याग्नौ मेदि॰ । ५वृषे ६अश्वे च हेमच॰ ।

**वृषनाशन** पु॰ वृषान् मूषिकान् नाशयति नश-णिच् ल्यु । १विड़ङ्गे शब्दमा॰ । २अरिष्टवृषभनाशके श्रीकृष्णे हरिवं॰ ७८अ॰ ।

**वृषपर्णी** स्त्री वृषस्य मूषिकस्य कर्णइव पर्णमस्याः । (उन्दूरकाणी) १आखुकर्ण्याम् रत्नमा॰ । २सुदर्शनीवृक्षे राजनि॰ ।

**वृषपर्वन्** पु॰ वृषे पर्व उत्सवो यस्य । १शिवे २दैत्यभेदे च । वृषं बलकरं पर्व यस्य । ३भृङ्गारवृक्षे ४कशेरौ च विश्वः ।

**वृषभ** पु॰ वृष-अभच् किच्च । १वृषे २श्रेष्ठे ३वैदर्भीरीतिभेदे मेदि॰ । ४जिनभेदे हेमच॰ । ५कर्णच्छिद्रे ६ऋषभनामौषधे च उणादि॰ । [दयोऽप्यत्र ।

**वृषभगति** पु॰ वृषभेण गतिरस्य । शिवे हारा॰ वृषभयाना-

**वृषभध्वज** पु॰ वृषभो ध्वजोऽस्य । शिवे वृषभकेतनादयोऽप्यत्र

**वृषभाक्षी** स्त्री वृषभस्य अक्षीव पुष्पमस्याः षच् समा॰ङीष् । इन्द्रवारुण्याम् राजनि॰ ।

**वृषभानु(न)** पु॰राधिकायाः पितरि । ब्रह्मवै॰ज॰ १७अ॰ ।

**वृषभानु(न)सुता** स्त्री ६त॰ । राधिकायाम् । [त्रिका॰ ।

**वृषभासा** स्त्री वृष्णा इन्द्रेण भासते भास-अच् । अमरावत्यां

**वृषल** पु॰ वृष-कलच् । १शूद्रे २लशुने ३घोटके ४चन्द्रगुप्तनृपे च मेदि॰ । ५अधार्मिके जटा॰ ।

**वृषली** स्त्री “पितृगेहे च नारी रजः पश्यत्यसंस्कृता । भ्रूणहत्या पितुस्तस्याः सा कन्या वृषली स्मृता” इत्युक्तायां पितृगृहे दृष्टरजस्कायामनूढायां १कन्यायाम् । वृषल+भार्य्यायां जातौ वा ङीष् । २वृषलजातिस्त्रियां

३तद्भार्य्यायाञ्च। "ब्रह्महा वृषलीपतिः" इति "वृषली-फेनपीतस्य" इति च मनुः।

**वृषलोचन** पु० वृषस्येव लोचनं यस्य। १मूषिके। हेम०। २वृषनेत्रे न०। ६त०। ३वृषतुल्यनेत्रे त्रि०।

**वृषवाहन** पु० वृषो वाहनमस्य। शिवे वृषभवाहनादयोऽप्यत्र

**वृषव्रत** पु० ६त०। श्रीकृष्णे त्रिका० वृषान्तकादयोऽप्यत्र।

**वृषस्यन्ती** स्त्री वृषेण जनननमिच्छति वृष+जाभार्थे क्यच् सुक् च शतृ-ङीप्। कामुकायाम् अमरः "लक्ष्मणं सा वृषस्यन्ती" भट्टिः। स्त्रियाम् अमरः। ३कपिकच्छ्वां हेमच०।

**वृषा** स्त्री वृषः मूषिकस्तदाकारः पर्णोऽस्याः अच्। १मूषिकप-

**वृषाकपायी** स्त्री वृषाकपेः पत्नी ङीप् ऐङ् च। १लक्ष्म्यां २गौर्य्याम् अमरः। ३स्वाहायां ४शच्यां ५जीवन्त्यां ६श-तावर्य्याञ्च मेदि०।

**वृषाकपि** पु० वृषं धर्मं न कम्पयति न+कपि-इन् नलोपः। १महादेवे २विष्णौ ३वह्नौ मेदि० ४इन्द्रे क्षीरस्वामी।

**वृषाकर** पु० वृषस्य सामर्थ्यस्याकरः। माषे राजनि०।

**वृषाङ्क** पु० वृषः अङ्कोऽस्य। १शिवे २भल्लातके ३षण्डे च ४साधौ पुण्यवति च मेदि०।

**वृषाहार** पुंस्त्री० वृषो मूषिक आहारो यस्य। विडाले हारा०

**वृ(बृ)षि(षी)** स्त्री वर्ष्यादित्वे ऋ वन्तोऽस्यां सीदन्ति सद- ड्ट् ऋ वः बृ आदेशः ङीप् वृषी० अन्तःस्थादित्वे वृष-कि वा ङीष्। व्रतिनां कुशमयासनभेदे अमरः।

**वृषोत्सर्ग** पु० उत्+सृज-घञ् ६त०। मृतादुद्देशेन तत्-पुत्रादिभिः क्रियमाणे विधानेन वृषस्य त्यागे तद्विधिर्यथा शु०त० "कालविवेके आग्नपु० "एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः। प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति। आद्यश्राद्धे त्रिपक्षे वा षष्ठे मासि च वत्सरे। वृषोत्सर्गस्य कर्त्तव्यो यावत् स्यात् सपिण्डता। सपिण्डीकरणादूर्द्ध्वं कालोऽन्यः शास्त्रचोदितः"। यस्य प्रेतस्येति सामान्यश्रुतेः पितृभिन्नस्यापि वृषोत्सर्गः प्रतीयते। त्रिपक्षोऽत्र चान्द्रः श्राद्धे तथादर्शनात् श्राद्धप्रदीपे जातु० "ऊर्द्ध्वं त्रिपक्षात् यत् श्राद्धं मृता-हन्येव तद्भवेत्"। अत्र पूर्वमृततिथिमादाय त्रिपक्षगणना मासिकानां मृततिथौ विधानात् त्रिपक्षश्राद्धमपि मृताहे कार्य्यम्। अत्र वत्सरे इत्युपादानात् विष्णुधर्म्मोत्तरीये मृताह इति पदं पूर्णसंवत्सरमृततिथिपरम्। तदुक्तम् वृषोत्सर्गमधिकृत्य विष्णुः "विषुव द्वितये चैव मृताहे बान्धवस्य च। मृताहो यस्य यस्मिन् वा तस्मिन्नहनि कारयेत्"। यस्य बान्धवस्य पित्रादेर्यस्मिन्नहनि मृताहः तत्तिथौ कर्त्तव्यमित्यर्थः। (तत्तिथेश्च प्रथमादिकला-ह्रासवृद्ध्यन्यतरक्रियया सजातीयतिथित्वेन त्रिपक्षश्राद्धे पक्षान्तरत्वेऽपि न क्षतिः)। छन्दोगप० "वृषोत्सर्गविधिं व्याख्यास्यामः "कार्त्तिक्यां पौर्णमास्यां रेवत्यामाश्वयुज्यां दशाहे गते संवत्सरेऽतीते वा"। अत्र मृततिथिमादाय वत्सरगणना दशाहवदित्यविरोधः। एकादशाह इति आद्यश्राद्ध इति च अशौचान्तद्वितीयदिनपरम्। अशौ-चान्तात् द्वितीयेऽह्नीत्युपक्रमे "वृषोत्सर्गश्च कर्त्तव्यो देया च कपिला शुभा" मत्स्यपु० एकवाक्यत्वात्। प्रेतवृषोत्सर्गे वृद्धिश्राद्धं न कार्य्यम् "नार्वाक् संवत्सरात् वृद्धिर्वृषोत्सर्गे विधीयते। सपिण्डीकरणादूर्द्ध्वं वृद्धिश्राद्धं विधीयते" छन्दोगपरिशिष्टवचनात्। वृषलक्षणमाह कर्मप्र० कात्या० "अव्यङ्गो जीववत्सायाः पयस्विन्याः सुतो बली। एकवर्णो द्वि-वर्णो वा यो वा स्यादष्टकासुतः। यूथादुन्नततरो यस्तु समो वा नीच एव वा। समावरान् सप्त परानुत्सृष्टस्तारयेद्-वृषः"। अष्टकासुतः अष्टकातिथिषु जातः "वृष एव स मोक्तव्यो न सन्धार्य्यो गृहे वसन्" मत्स्यपु०। वत्सतरी-विशेषमाह कात्या० "अमृतो लोहिता पत्नी पाण्डुर्भ्याम् नीलपाण्डुरे। पृष्ठतस्य भवेत् कृष्णा वृषभस्य च मोक्षणे। चतस्रो वत्सिका भद्रा द्वे वा तस्मात्तोऽपि वा। वत्स सर्वाङ्गसम्पूर्णा कन्या सा वत्सिका भवेत्" देवीपु०उ०। अत्र सम्भवत इत्युक्त्या एकयापि वत्सतर्य्या वृषोत्सर्गः सिध्यति। "अङ्कित्वोत्सृज्यते पूर्वं गात्रालङ्कृत्य सर्वतः। तप्तेन वामतश्चक्रं याम्ये शूलं समालिखेत्। धातुना हेमतारेण आयसेनाथवाऽङ्कयेत्" देवीपु०। प्रेतोद्देश्यकवृषोत्सर्गस्तु मलमासादावपि कर्त्तव्यः "अशौचान्तेऽपि कर्त्तव्यं वृषो-त्सर्गादिकं बुधैः। मलिम्लुचादिदोषस्तु न भवेत्तत्र क-र्हिचित्" शु०त० धृतवाक्यात्। कालमाधवीये कालादर्शे च मलमासे कर्त्तव्यतानिषेधमुपक्रम्य प्रत्युक्तं यथा "चाश्रम स्वीकृतिः काम्यवृषोत्सर्गश्च निष्कृतः"। अत्र काम्येति विशेषणात् नित्यस्य न निषेधः "अशौचान्तात् द्वितीये-ऽह्नि यस्य नोत्सृज्यते वृषः। न तस्य निष्कृतिर्दृष्टा दत्तैः श्राद्धशतैरपि" इत्युक्तेस्तस्य नित्यत्वम् चन्द्रनधेनुश्चान्य दृश्यम्।

**वृष्टि** स्त्री वृष-क्तिन्। १वर्षणे अमरः। कर्मणि क्तिन्। मेघादिभिः २सिच्यमाने जले। तत्कारणं यथा "ऋतवस्तु परमार्कश्च किमिन्द्रादृष्टादेव च। कुर्यात्

जायते तोयं तोयात् शस्यानि शाखिनः। तेभ्योऽन्नानि फलान्येव तेभ्यो जीवन्ति जीविनः। सूर्य्यस्तत्र नीरञ्च काले तस्मात् समुद्भवः। सूर्य्यो मेघादयः सर्वे विधात्रा ते नियोजिताः। सप्तावर्त्ते यो जलधरो गजश्च सागरोऽभवत्। सस्याधिपो नृपो मन्त्री विधात्रा ते निरूपिताः। जलाढकानां सस्यानां तथानाञ्च निरूपितम्। अब्देऽब्देऽस्त्येव तत् सर्वं कल्पे कल्पे युगे युगे। हस्ती समुद्रादादाय करेण जलमीप्सितम्। दृष्ट्वा जनाय तद्वत्यादातेन प्रेरितो घनः। स्थाने स्थाने पृथिव्याञ्च काले काले यथोचितम्। ईश्वरेच्छया विमूर्त्तं गूर्णं तत्प्रतिबन्धकम्। भूतं भव्यं भविष्यञ्च भवत् सूक्ष्मञ्च मध्यमम्। धात्रा निरूपितं कर्म केन तात! निवार्य्यते" ब्रह्मवै० जन्म० २१ अ०। "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रजाः" गीता। आसन्नवृष्टिसूचकानि यथा "मयूराः स्तनयित्नूनां शब्देन ह्वायिता हृदः। केकायन्ति प्रतिध्वने सततं वृष्टिसूचकाः। मेघावृत्तकानां मधुरस्वातकानां मनोहरः। श्रूयतामतिमत्तानां वृष्टिसन्निधिसूचकः। गगने शक्रचापेन क्षतं साम्प्रतमास्तदम्। धारासारशरैस्तापं छेत्तुं प्रति यथोद्गतः" कालिकापु० १५ अ०।

**वृष्टिघ्नी** स्त्री वृष्टिं हन्ति कारणत्वेन जहाति हन—क ङीप्। सूक्ष्मैलायाम् शब्दच०।

**वृष्टिजीवन** त्रि० वृष्टिः वृष्टिजलमेव जीवनं पालनोपायो यस्य। १वृष्टिजलमात्राजीविनि चातके। २देवमातृके देशे हेमच०। [हारा०। २वृष्टिभवे त्रि०।

**वृष्टिभू** पु० वृष्टौ तदुपलक्षिते काले भवति भू—क्विप्। १भेके

**वृष्टिवैकृत** न० ६त०। उपद्रवसूचके वृष्टिविकारे यथोक्तं वृ० सं० ४६ अ०

"दुर्भिक्षमनावृष्ट्यामतिवृष्ट्यां क्षुद्भयं सपरचक्रम्। रोगो ह्यन्तुभवायां नृपवधोऽनभ्रजातायाम्। शीतोष्णविपर्य्यासे नो सम्यगृतुषु च सञ्जातेषु। षण्मासाद्राष्ट्रभयं रोगभयं दैवजनितं च। अन्यर्तौ षण्मासं प्रबन्धवर्षे प्रधाननृपमरणम्। रक्ते शस्त्रोद्योगो मांसास्थिवसादिभिर्मरकः। धान्यहिरण्यत्वक्फलकुसुमाद्यैर्वर्षितैर्भयं विद्यात्। अङ्गारपांशुवर्षे विनाशमायाति तन्नगरम्। उपला विना जलधरैर्विकृता वा प्राणिनो यदा वृष्टाः। छिद्रं वाप्यतिवृष्टौ सस्यानामीतिसञ्जननम्। क्षीरघृतक्षौद्राणां दध्नो रुधिरोष्णयोर्वा वर्षे। देशविनाशो ज्ञेयोऽसृग्वर्षे चापि नृपयुद्धम्। यद्यमलेऽर्के छाया न दृश्यते दृश्यते प्रतीपा वा। देशस्य तदा सुमहद्भयमायातं विनिर्दिश्यम्। व्यभ्रे नभसीन्द्रधनुर्दिवा यदा दृश्यतेऽथ वा रात्रौ। प्राच्यामपरस्यां वा तदा भवेत् क्षुद्भयं सुमहत्। सूर्य्येन्दुपर्जन्यसमीरणानां योगः स्मृतो वृष्टिविकारकाले। धान्यान्नगोकाञ्चनदक्षिणाश्च देयास्ततः शान्तिमुपैति पापम्"।

**वृष्णि** पु० वृष—नि किच्च। १यादववंशेषु नृपभेदे शब्दच०। २श्रीकृष्णे ३मेषे अमरः। ४चण्डे ५पाषण्डे च त्रि० शब्दर०।

**वृष्णिगर्भ** पु० वृष्णिः यादवकुलं गर्भो यस्य। श्रीकृष्णे हारा०

**वृष्य** पु० वृषाय हितो यत् वृष—क्यप् वा। १माषे हेमच०। २शुक्रवृद्धिकारके त्रि० भावप्र०। ३वाजीकरणे न० ४आमलक्यां ५शतावर्य्यां ५ऋषभनामौषधौ च स्त्री राजनि०। ७ऋद्धिनामौषधौ भावप्र०। [राजनि०।

**वृष्यकन्दा** स्त्री वृष्यः शुक्रवर्द्धकः कन्दो यस्याः। विदार्य्याम्

**वृष्यगन्धिका** स्त्री वृष्यः शुक्रवर्द्धको गन्धो यस्याः कप् अत इत्त्वम्। अतिबलायाम् राजनि०। कप्रभावे वृष्यगन्धा वृद्धदारके स्त्री शब्दच०। [वृष्यवल्लिका तत्रैव स्त्री।

**वृष्यवल्ली** स्त्री कर्म०। १विदार्य्याम् राजनि०। स्वार्थे क ह्रस्वः।

**वृह** दीप्तौ वा चु० उभ० सक० पक्षे भ्वा० पर० इदित्। वृंहयति ते अववृंहत् त। वृंहति अवृंहीत्।

**वृह** वृद्धौ शब्दे च अक० भ्वा० पर० सक० सेट्। वर्हति इरित् अवृहत् अवर्हीत्। [इदित्। वृंहति अवृंहीत्

**वृह** ध्वनौ हस्तिध्वनौ वृद्धौ च भ्वा०पर० पर०अक० सेट्।

**वृह** वृद्धौ भ्वा०पर०सक० सेट्। वर्हति अवर्हीत्।

**वृह** उद्यमे तु०पर०अक०सेट्। वृहति। अवर्हीत्-अवृक्षत्।

**वृह** वृद्धौ भ्वा०आत्म० सक० सेट् इदित्। वृंहते अवृंहिष्ट।

**वृहच्चञ्चु** पु० वृहती चञ्चुरिव मञ्जरी यस्य। महाचञ्चुशाके राजनि०। [१फलपूरे शब्दार्थचि०। २उदारचित्तयुते त्रि०।

**वृहच्चित्त** पु० वृहत् उदारं चित्तं यस्मात् ५ब०। यस्य वा ६ब०।

**वृहच्छल्क** पु० वृहत् शल्को यस्य। चिङ्गटमत्स्ये जटा०।

**वृहत्** त्रि० वृह—अति। महति अमरः स्त्रियां गौरा० ङीष्।

**वृहती** स्त्री वृहत्+गौरा० ङीष्। १महत्यां स्त्रियां २क्षुद्रवार्त्ताक्याम् राजनि०। ३वारिधान्यां ४वाचि ५कण्टकारिकायाम् मेदि०। ६नव चरणादके छन्दोभेदे वृ०र०। ७संज्ञायां कन् ह्रस्वः। उत्तरीयवस्त्रे स्त्री अमरः।

**बृहतीपति** पु० बृहतीनां वाचां पतिः । बृहस्पतौ हेमच० ।

**बृहत्कन्द** पु० बृहत् कन्दो यस्य । १गृञ्जने रत्नमा० । २विष्णुकन्दे च राजनि० ।

**बृहत्काश** पु० कर्म० । (खागड़ा) तृणभेदे हारा० ।

**बृहत्कालशाक** पु० कर्म० । (बड़ कालकासुन्दे) शाकभेदे त्रिका० ।

**बृहत्कुक्षि** पु० बृहत् कुक्षिर्यस्य । तुन्दिले (भुँडे) अमरः ।

**बृहत्ताल** पु० कर्म० । हिन्ताले राजनि० ।

**बृहत्तिक्ता** स्त्री कर्म० । पाठायाम् (आकनादि) राजनि० ।

**बृहत्तृण** पु० बृहत् तृणं यत्र । वंशे शब्दच० ।

**बृहत्त्वच्** पु० बृहती त्वक् यस्य । (छातियान) वृक्षे रत्नमा०

**बृहत्पत्र** पु० बृहत् पत्त्रमस्य । १हस्तिकन्दे (हातिकान्दा) राजनि० । २त्रिपर्णिकायां स्त्री राजनि० ।

**बृहत्पाटलि** पु० चु० पट—अलि कर्म० । धुस्तूरवृक्षे त्रिका० ।

**बृहत्पाद** त्रि० बृहत् पादो मूलमस्य । वटवृक्षे शब्दच० ।

**बृहत्पालिन्** पु० बृहतः पालयति पाल—णिनि । वनजीरके राजनि० ।

**बृहत्पीलु** पु० कर्म० । महापीलौ राजनि० ।

**बृहत्फला** स्त्री बृहत् फलं यस्याः । १कटुतुम्ब्याम् २महेन्द्रवारुण्यां ३कुष्माण्ड्यां ४महाजम्ब्वां च राजनि० ।

**बृहत्साम** न० कर्म० । "त्वामिद्धि हवामहे" इत्यस्यामृचि गीयमाने साम्नि "बृहत्साम तथा साम्नाम्" गीता ।

**बृहदङ्ग** पुंस्त्री० बृहदङ्गमस्य । गजे शब्दच० स्त्रियां ङीष् ।

**बृहदम्ल** पु० कर्म० । (कामराङ्गा) वृक्षे शब्दच० ।

**बृहदेला** स्त्री कर्म० । स्थूलैलायाम् राजनि० ।

**बृहद्गृह** पु० कारूषदेशे त्रिका० । स च हिमालयस्य पश्चाद्दक्षिणस्यां मालवदेशस्य सन्निकृष्टः ।

**बृहद्गोल** न० कर्म० । (तरमुज) लताफले शब्दच० ।

**बृहद्दल** व० बृहत् दलमस्य । १पट्टिकालोध्रे २हिन्ताले च राजनि० ।

**बृहद्दल** न० कर्म० । महाबाङ्कले त्रिका० ।

**बृहद्भानु** पु० बृहद्भानुः किरणो यस्य । १अग्नौ २चित्रकवृक्षे [च अमरः ।

**बृहद्रथ** पु० बृहत् रथोऽस्य । १इन्द्रे २यज्ञपात्रभेदे ३सामभेदे च ।

**बृहद्राविन्** पु० बृहत् रौति—रु-णिनि । क्षुद्रोलूके रा-[जनि० ।

**बृहद्वल्क** पु० बृहत् वल्कमस्य । पट्टिकालोध्रे राजवल्लभः ।

**बृहद्वात** पु० बृहत् वातो वातभेदो यस्मात् ५ब० । (देधान) वृक्षे रत्नमाला ।

**बृहद्वारुणी** स्त्री कर्म० । महेन्द्रवारुण्याम् राजनि० ।

**बृहद्वीज** पु० बृहत् वीजमस्य । आम्रातके शब्दच० ।

**बृहन्नल** पु० बृहत् नलो यस्य । महापोटगले मेदि० ।

**बृहन्नला(डा)** पुंस्त्री० बृहत् नलो यस्य वा डस्य लः । अर्जुने हेमच० विराटपर्वणि तत्कथा दृश्या ।

**बृहस्पति** पु० बृहत्याः वाचः पतिः सुट् नि० । १जीवे देवाचार्ये अमरः २ग्रहभेदे सू० सि० खगोलशब्दे तत्कक्षादिमानं तद्रूपादि च ग्रहयज्ञशब्दे दृश्यम् । बृहस्पतिना च बौद्धधर्मः प्रवर्त्तितो यथाह मत्स्यपु० २४ अ० "ततो बृहस्पतिः शक्रमकरोद्बलदर्पितम् । ग्रहशान्तिविधानेन पौष्टिकेन च कर्मणा । गत्वाथ मोहयामास रजिपुत्रान् बृहस्पतिः । जिनधर्मं समास्थाय वेदबाह्यं स वेदवित् । वेदत्रयी परिभ्रष्टांश्चकार धिषणाधिपः । वेदबाह्यान् परिज्ञाय हेतुवादसमन्वितान् । जघान शक्रो वज्रेण सर्वधर्मबहिष्कृतान्" । बृहस्पतिसवः यज्ञभेदः ।

**बॄ** वरणे क्र्या० पा० उभ० सक० सेट् । बृणाति बृणीते अवारीत् अवरिष्ट-अवरीष्ट-अवूर्त्त । ववरतुः ।

**वे** सूतौ भ्वा० उभ० यजा० सक० अनिट् । वयति ते अवासीत् अवास्त वा वयादेशः उवाय ऊयतुः ऊवतुः ।

**वेग** पु० विज—घञ् । १प्रवाहे हेमच० । २जवे अमरः ३महाकालफले मेदि० ४रेतसि हेमच० । ५मूत्रविष्ठादिनिःसारणयत्ने इत्यायोक्ते संस्कारभेदे च "सङ्ख्यादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः" । "क्षितिर्जलं तथा तेजः पवनो मन एव च । परापरत्वमूर्त्तत्वक्रियावेगाश्रया अमी" भाषा० तस्य क्षित्यादिगुणतोक्ता । "स्वभावतः प्रवृत्तानां मलादीनां जिजीविषुः । न वेगं धारयेद्धीरः कामादीनाञ्च धारयेत्" राजनि० ।

**वेगसर** पुंस्त्री० वेगेन सरति सृ—ट । वेगगामिहये १अश्वतरे हेमच० । स्त्रियां ङीप् । २वेगगामिमात्रे त्रि० स्त्रियां ङीप् ।

**वेगिन्** पु० वेग+अस्त्यर्थे इनि । १श्येनविहगे राजनि० । [२वेगवति त्रि० अमरः स्त्रियां ङीप् ]

**वेचा** स्त्री विच—पृथक्त्वे अच् । वेतने हला० ।

**वेजानी** स्त्री विज—अच तमानयति आ—नी-ड गौरा० ङीष् सोमराज्याम् शब्दच० ।

**वेड** न० विड-अच् । १सान्द्रनिष्पिष्टचन्दने हेमच० २नौकायां स्त्री हेमच० ।

**वेडमिका** स्त्री रोटिकाभेदे भावप्र० लतावशब्दे दृश्यम् ।

**वेण** निशामने वाद्यादाने गतौ ज्ञाने चिन्तायाञ्च भ्वा० उभ०

स्वा० सेट् । वेणति ते । अवेणीत् अवेणिष्ट । ऋदित् चङि न ह्रस्वः ।

**वेण** पु० वेण—अच् । १वर्णसङ्करजातिभेदे "वैदेहकेन त्वम्बष्ठ्यामुत्पन्नो वेण उच्यते" मनुः । २पृथुराजपितरि नृपभेदे "सत्पुत्रेण तु जातेन वेणोऽपि ३नदीभेदे स्त्री । त्रिदिवं ययौ" विष्णुपु० । दन्त्यान्तत्वमस्येत्यन्ये ।

**वेणि(णी)** स्त्री वेण—इन् वा ङीप् । १केशरचनाभेदे अमरः २जलसमूहे जटा० । ३तत्प्रवाहे हेमच० । ४देवताडवृक्षे अमरः । ५नदीभेदे तदुत्पत्तिकथा पद्मोत्तर० १५६अ० । ६गङ्गायमुनासरस्वतीमेलनस्थाने च । प्रयागशब्दे दृश्यम् ।

**वेणीर** पु० वेण—ईरन् । अरिष्टवृक्षे (निम) शब्दच० ।

**वेणु** पु० वेण—उण् । १वंशे अमरः । २तद्विकारे वंशीवाद्ये च शब्दच० । "मा पूरय वेणुम्" इत्युद्भटः । ३नृपभेदे मेदि० ।

**वेणुक** न० वेणुरिव वेणोर्विकारो वा कन् । तोत्त्रे हेमच० । (पाचनवाड़ि) ।

**वेणुकर्कर** पु० वेणुरिव कर्करः । करवीरवृक्षे त्रिका० ।

**वेणुज** पु० वेणुतो जायते जन—ड । १वेणुजाते यवाकारे तण्डुले राजनि० । २वंशजाते दण्डादौ त्रि० ।

**वेणुध्म** पु० वेणुं वंशीं धमति ध्मा—क । वेणुवादके अमरः ।

**वेणुन** न० वेण—उनन् । मरिचे रत्नमा० ।

**वेणुपत्री** स्त्री वेणोरिव पत्त्रमस्याः । वंशपत्त्रीवृक्षे रत्नमा० ।

**वेणुयव** पु० वेणुजातो यव इव । १वंशजाते २तण्डुलाकारे पदार्थे राजनि० । [खुल । वेणुवादक तत्रैव त्रि० ।

**वेणुवाद** त्रि० वेणुं वादयति वद—णिच्—अण् । वेणुवादके

**वेणुवीज** न० ६त० । वेणुजाते यवाकारे पदार्थे राजनि० ।

**वेतन** न० अज—तनन् वीभावः । १कृतकर्मणोऽभृतौ अमरः । भृतिशब्दे दृश्यम् । २जीवनोपाये हेमच० ।

**वेतनानपाकर्मन्** न० ६त० । व्यवहारभेदे तत्स्वरूपादिकं वीरमि० उक्तं यथा नारदः "भृतानां वेतनस्योक्तो दानादानविधिक्रमः । वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्" । वेतनं कर्ममूल्यं तस्यानपाकर्म भृत्याय समर्पणं समर्पितस्य वा परावर्त्तनम् । तत्र समर्पणे विशेषमाह स एव "भृत्याय वेतनं दद्यात् कर्मस्वामी यथाक्रमम् । आदौ मध्येऽवसाने तु कर्मणो यद्विनिश्चितम्" । तुभ्यमेतावद्वेतनं दास्यामीति यद्वेतनं परिभाषातो निश्चितं तत्त्रिधा विभज्य कर्मण आदिमध्यान्तेषु त्रिषु कालेष्वन्यतमकाले वा दद्यादित्यर्थः । एतच्चैतावद्वेतनं दास्यामीति भाषायाः सत्त्वे । असत्त्वे त्वाह स एव "भृतावनिश्चितायां तु दशभागमवाप्नुयुः । लाभं गोवीर्य्यशस्यानां वणिग्गोपकृषीबलाः" इति । दशभागं दशमम्भागङ्गोवीर्य्य' पाल्यमानगवादिभवस्य क्षीरदध्यादि । यदि कर्मस्वामी भृत्याय दशमम्भागन्न प्रयच्छति तदाऽसौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः "दाप्यस्तु दशमम्भागं वाणिज्यपशुशस्यतः । अनिश्चित्य भृतिं यस्तु कारयेत् स महीक्षिता" इति । यस्तु स्वामी वेतनपरिच्छेदमकृत्वैव भृत्यं कर्म कारयति स तस्माद् वाणिज्यपशुशस्यलक्षणात् कर्मणः सकाशाद् यल्लब्धं तस्य दशमं भागं भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः । यत् तु "त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहकः" इति बृहस्पतिवचनं तद्बह्वायाससाध्याकृष्टक्षेत्रविषयम् । व्यवस्थितविकल्पस्त्वयम् । कथमत्र व्यवस्थेत्याकाङ्क्षायामाह स एव "भक्ताच्छादभृतः सीरी भागं गृह्णीत पञ्चमम् । जातशस्यात्त्रिभागं तु प्रगृह्णीयादथाऽभृतः" इति । अशनाच्छादनाभ्यां भृतः कृषीबलो लाङ्गलविकृष्टक्षेत्रजातशस्यात् पञ्चमम्भागं गृह्णीयात् । ताभ्यामभृतस्तु तृतीयं भागमित्यर्थः । अथ वा यत्रैतावद्दास्यामीति नास्ति परिभाषा तत्र बृहस्पतिनोक्तं द्रष्टव्यम् "समुद्रयानकुशला देशकालार्थदर्शिनः । नियच्छेयुर्भृतिं यान्तु सा स्यात् प्रागकृता यदा" इति । एतावद्दास्यामीति परिभाषितेऽपि क्वचित्ततो न्यूनमपि स्वामिनाऽपरिकल्पितं देयं क्वचित्ततोऽधिकमपि देयमित्याह याज्ञवल्क्यः "देशं कालञ्च योऽतीयाल्लाभं कुर्य्याच्च योऽन्यथा । तत्र स्यात् स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके" इति । यो भृत्यः स्वाम्यनुज्ञां विना स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वापादकं देशं कालं चातिक्रामति लाभं वा बहुतरं व्ययेन स्वल्पं करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद् दद्यात् । यस्तु स्वातन्त्र्येण बहुलाभं करोति तस्मै परिभाषितमूल्यादधिकं किञ्चिद्देयं स्वामिना पारितोषिकमित्यर्थः । अनेकभृत्यसाध्यकर्मणि वेतनार्पणप्रकारमाह स एव "यो यावत् कुरुते कर्म तावत् तस्य तु वेतनम् । उभयोरप्यसाध्यं चेत् साध्ये कुर्य्याद् यथाश्रुतम्" इति । उभयोरपीत्यपिना बहूनां ग्रहणम् अस्मिन् गृहादौ कृते भवतामेतावद्दास्यामीति परिभाषिते द्वित्रिबहुभिरारब्धं कर्म यदि व्याध्यादिव-

याश्च समापितं तदा तेषु यो यावत् कर्म्म करोति तस्मै तत्कर्म्मानुसारेण मध्यस्थपरिकल्पितं वेतनं देयम्। न तु साम्येन दानन्न च परिसमाप्त्यभावाददानम्। यदि तैः समापितं तदा यथा परिभाषितं देयन्न तु प्रत्येकं कृत्स्नं दातव्यं नापि कर्म्मानुसारेण परिकल्प्य दातव्यमित्यर्थः। यस्तु वेतनं गृहीत्वा समर्थोऽपि न कर्म्म करोति तं प्रत्याह बृहस्पतिः “गृहीतवेतनः कर्म्म न करोति यदा भृतः। समर्थश्चेद्दमन्दाप्यो द्विगुणं तच्च वेतनम्” इति। दमं शक्त्यनुसारेण राज्ञा दाप्यः। गृहीतञ्च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः। नारदोऽपि “भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेत्” इति। याज्ञवल्क्योऽपि “गृहीतवेतनः कर्म्म त्यजन् द्विगुणमावहेत्” इति। अस्मिन्नेव विषये यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने देयन्न तु राज्ञे दण्डमित्यर्थः। यद्वाङ्गीकृतां भृतिं दत्त्वा बलात्कारयितव्य इत्याह नारदः “कर्म्माकुर्वन् प्रतिश्रुत्य कार्य्यो दत्त्वा भृतिं बलात्” इति। प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् अतएव कात्यायनः “कर्म्मारभ्य तु यः कृत्वा सिद्धिन्नैव तु कारयेत्। बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति” इति। कियद्द्रव्यं दण्ड्य इत्यपेक्षायामाहतुर्म्मनुबृहस्पती “प्रतिश्रुत्य न कुर्य्याद्यः स कार्य्यः स्याद्बलादपि। स चेन्न कुर्य्यात् तत्कर्म्म प्राप्नुयाद् द्विशतं दमम्” इति। द्विशतं कार्षापणद्विशतमित्यर्थः। यत्तु मनुवचनम् “भृतोऽनार्त्तो न कुर्य्याद्यो दर्पात् कर्म्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयं तस्य वेतनम्” इति। तदल्पदण्डत्वादनारम्भविषयमिति स्मृतिचन्द्रिकायाम्। अल्पन्यूनकर्म्मकरणविषयमिति मदनरत्ने। किञ्चिन्न्यूनकर्म्मकरणे त्वाह स एव “यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म्म न कारयेत्। न तस्य वेतनं देयमल्पोनस्यापि कर्म्मणः” इति। सुस्थो वा कर्म्म कारयेदिति वदता सुस्थेऽपि स्वयं कर्त्तृत्वनियमो नास्तीति दर्शयति। आर्त्तो यदि स्वास्थ्योपशमानन्तरं स्वाङ्गीकृतं कर्म्म करोति तदार्त्ते दीर्घकालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ निर्विवादं लभत इत्याह स एव “आर्त्तस्तु कुर्य्यात् सुस्थः सन् यथाभाषितमादितः। सुदीर्घस्यापि कालस्य तल्लभेतैव वेतनम्” आदितः आदौ यथाभाषितं यथाप्रतिज्ञातं तथा कुर्य्यादित्यर्थः। सुदीर्घस्यापि कालस्य अत्ययेऽपीति शेषः।

यस्तु कालविशेषावधिकं कर्म्म प्रतिज्ञाय तत्कालापूर्त्तावेव कर्म्म त्यजति तं प्रत्याह नारदः “कालेऽपूर्णे त्यजन् कर्म्म भृतेर्नाशमवाप्नुयात्”। अत्र दण्डमप्याह विष्णुः “भृतकश्चापूर्णे काले त्यजन् सकलमेव मूल्यञ्जह्यात् राज्ञे च पणशतं दद्यादिति”। मूल्यं वेतनम्। स्वामिदोषात्त्यागे तु यावति काले कर्म्म कृतं तत्कालानुसारेण कल्पितं वेतनं लभत इत्याह नारदः “स्वामिदोषादपक्रामन् यावत् कृतमवाप्नुयात्” इति। स्वामिदोषो विनापराधं निष्ठुरभाषणादिः। अत्र दण्डमप्याह विष्णुः “स्वामी चेद्भृतकमपूर्णे काले जह्यात् तस्य सर्व्वमेव मूल्यं दद्यात् पणशतञ्च राजन्यत्र भृतदोषादिति”। स्वामिद्रव्यस्य भृत्यदोषेण नाशे यत् कर्त्तव्यं तदाह स एव। “तद्दोषेण यद्विनश्येत्तत् स्वामिने देयमन्यत्र दैवोपघातादिति”। दैवोपघातो राजकृतस्याप्युपलक्षणम्। स्वामिने देयं मूल्यद्वारेणेति शेषः। अत्र दोषविशेषाद्विशेषमाह बृहन्मनुः “प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम्” इति। प्रमादान्नाशितमनवधाननाशितं सममेव दद्यात्। द्रोहनाशितं तीव्रप्रयत्नादिना द्रोहेण नाशितं द्विर्दाप्यो द्विगुणं दाप्य इत्यर्थः। भृत्यदोषाभावे यदन्यत एव नष्टं तन्न देयमित्याह स एव “न तु दाप्यो हृतञ्चौरैर्दग्धमूढं जलेन वेति”। ऊढं नीतम्। यस्तु वाहको वाह्यं द्रव्यं प्रमादहीनत्वादिना स्वदोषेण नाशयति तं प्रत्याह नारदः “भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः। दाप्यो यत्तत्र नश्येत्तु दैवराजकृताहते” इति। भाण्डं वहनीयं द्रव्यं मन्तुकादि व्यसनं नाशः। अत्र भाण्डवाहकयोरुष्ट्रबलीवर्द्दक्रमेलकयोरुपलक्षणमिति मदनरत्ने। अत्रापि “प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितमिति” वृद्धमनूक्तो विशेषोऽवगन्तव्यः। यस्तु वाहकः स्वदोषेण प्रस्थानविघ्नं करोति स द्विगुणां भृतिं दाप्य इत्याह कात्यायनः “विघ्नं यो वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम्” इति। विघ्नं करोतीति शेषः। वाहकग्रहणं प्रदर्शनार्थं न तु विवक्षितन्तेनायुधीयादेर्व्विघ्नकारिणोऽप्येतदिति मन्तव्यम्। अतएव नारदः “द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन्” इति सामान्येनोक्तवान्। याज्ञवल्क्योऽपि “प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्” इति। एतच्च भृत्यान्तरसम्पादनकालासम्भवविषयम्। अङ्गीकृतकर्म्मकरणस्यापि यदा स्वा-

यान्तरालाभेन प्रस्थानविघ्नापादकत्वं तदा त्वाह स एव "प्रक्रान्ते सप्तमम्भागञ्चतुर्थं पथि सन्त्यजन्। भृतिमर्द्धपथे सर्व्वां प्रदाप्यस्त्याजकोऽपि च" इति। प्रक्रान्ते कर्म्मणि स्वाङ्गीकृतं कर्म्म त्यजन् भृत्यो भृतेः सप्तमम्भागं दाप्यः। गमने प्रारब्धे पथि त्यजन् भृतेश्चतुर्थं भागम्। अर्द्धपथे त्यजन् सर्व्वां भृतिमित्यर्थः। त्याजकोऽपि चेत्यस्यायमर्थः गमनारम्भानन्तरं स्वामी यदि त्याजयति तदा पूर्व्वोक्तक्रमेण भृत्याय सप्तमभागादिकं दापनीय इति। एतच्चाव्याधितादिविषयम् व्याधितस्यापराधाभावात्। यच्च स्वामिना त्याजने चतुर्थभागदापनमुक्तं तदविक्रीतभाण्डस्वामिविषयम्। विक्रीतभाण्डस्वामिना यत् कर्त्तव्यं तदाह वृहन्मनुः "पथि विक्रीय तद्भाण्डं वणिक् भृत्यं त्यजेद् यदि। अथ तस्यापि देयं स्याद् भृतेरर्द्धं क्रमेण सः" इति। पथि भाण्डस्य चौरादिभिः प्रतिरोधे राजादिभिरपहृते स्वामिनः कर्त्तव्यमाह कात्यायनः "यदा च पथि यद्भाण्डमाच्छिद्येत ह्रियेत वा। यावानध्वा गतस्तेन प्राप्नुयात् तावतो धनम्" इति। तेन भारवाहकस्वीकृतेन यानादिना। भाण्डनेतारं प्रत्याह नारदः "अनयन् भाटयित्वा तु भाण्डवान् यानवाहनम्। दाप्यो भृतिचतुर्भागं सर्व्वमर्द्धपथे त्यजन्" इति। यानं शकटादि वाहनम् अश्वादि। अयमर्थः यो यानादिना भाण्डनयनं कर्त्तुं परकीयं यानादिकं भाटयित्वा प्रापणादिकार्य्योपाधिकं परिक्रयं कृत्वा तन्न नयति स यानस्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशं दाप्यः। यस्तु तन्नीत्वाऽर्द्धमार्गे त्यजति स सर्व्वां भृतिं दाप्य इति। यस्तु शकटादिकं भाटयित्वा तमेवोपकारमूल्यमादाय देशान्तरं गच्छति भाटकं च न प्रयच्छति तं प्रत्याह वृहन्मनुः "यो भाटयित्वा शकटं नीत्वा वाऽन्यत्र गच्छति। भाटं न दद्याद् दाप्यः स्यादनूढस्यापि भाटकम्" इति। अनूढस्यापि अकृतोपकारस्यापीत्यर्थः। यस्तु कृते कार्य्ये समनन्तरं वाहनादेः समर्पणं न करोति तस्य समर्पणपर्य्यन्तभाटकदानमाह कात्यायनः "हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः। नार्पयेत् कृतकार्य्यः संस्तावद्दाप्यः स भाटकम्। गृहवार्य्यापणादीनि गृहीत्वा भाटकेन यः। स्वामिने नार्पयेद् यावत्तावद्दाप्यः स भाटकम्" इति। वारिशब्देन तदाधारभूतं पात्रं लक्ष्यते। नार्पयेत् कृतकार्य्यः सन्नित्यनुषङ्गः। परभूमौ गृहनिर्म्माणाय भाटकदातारं प्रत्याह नारदः "परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत् तु यः। स तद्गृहीत्वा निर्गच्छेत् तृणकाष्ठेष्टकादिकम्" इति। स्तोमभाटकं स्तोमाप्रदानेऽप्याह स एव "स्तोमाद्विना वसित्वा तु परभूमावनिश्चितम्। निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन। यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिताः। विनिर्गच्छंस्तु तत् सर्व्वं भूमिस्वामिनि वेदयेत्" इति। स्वामिने निवेदयेदित्यर्थः। अनिश्चितमिति वदता तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शितम्। परिभाषाविषये तु यथा परिभाषितं कर्त्तव्यम्। भाटके गृहीतानां जलपात्रादीनां भङ्गे नाशे च विशेषमाह स एव "स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्। गृहीतुराहरेद्भग्नं नष्टञ्चान्यत्र संप्लवात्" इति। स्तोमवाहीनि भाटकगृहीतानि पूर्व्वपरिभाषितभाटकानि तत्स्वामिने प्रापयेदिति पूर्व्वार्द्धार्थः। भग्नमेकदेशेन विकृतं, नष्टम् कार्त्स्न्येन विकृतम्। संप्लवः परस्परसङ्घर्षः तद्भिन्नप्रकारेण यद्भग्नन्नष्टञ्च तद्भाटकगृहीतुर्भवति। संप्लवेन तु यद्भग्नन्नष्टञ्च तद्भाटकदात्रा पूर्व्ववत् कृत्वा मूल्यद्वारेण वा देयमित्यर्थः। व्याधितस्य भृत्यस्य स्वामिना पथि त्यागे दण्डमाह कात्यायनः "त्यजेत् पथि सहायं यः श्रान्तं रोगार्त्तमेव वा। प्राप्नुयात् साहसं पूर्व्वं ग्रामे त्र्यहमपालयन्" इति। स्वाम्यनुज्ञातेन भृत्येनापराधे कृते सोऽपराधः स्वामिन एवेत्याह वृहस्पतिः "प्रभुणा विनियुक्तः सन् भृतको विदधाति यत्। तदर्थमशुभं कर्म्म स्वामी तत्रापराप्नुयात्" इति। स्वामी कृतकर्म्मणे भृतकाय यदि न वेतनं ददाति तदाऽसौ राज्ञा दापनीयः इत्याह स एव "कृते कर्म्मणि यः स्वामी न दद्याद्वेतनं भृते। राज्ञा दापयितव्यः स्याद् वेतनञ्चानुरूपतः" इति। वेश्यातदुपभोक्तृविषये नारद आह "शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्। अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात्" इति। एतदव्याधितादिविषयम्। व्याधितादिविषये त्वाह वृहस्पतिः "व्याधिता सश्रमव्यग्रा राजकार्य्यपरायणा। आमन्त्रिता च नागच्छेदवाच्या वडवा स्मृता" इति। आमन्त्रिता आहूता। वडवा दासी तद्ग्रहणमत्र पण्यस्त्र्युपदर्शनार्थम्। उपभोक्तारं प्रत्याह नारदः "अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्। अक्रमेण तु सङ्गच्छेद् घातदन्तनखादिभिः। अयोनौ यः समाक्रा-

मेद् बहुभिर्शोपि वासयेत्। शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु” इति। वेश्यायास्त्वपराधे दण्डादिकं मत्स्यपुराणे दर्शितम् “गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति। तां दशं दापयेद्‌द्व्यादितरस्यापि भाटकम्” इति। इतरस्य दत्तशुल्कस्य। तत्रैव विशेषान्तरमुक्तम् “अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात्। तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम्। नीत्वा भोगञ्च यो दद्याद् दाप्यो द्विगुणवेतनम्। राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते। बहूनां व्रजतामेकां सर्वे तद् द्विगुणं धनम्। तस्यै दद्युः पृथक् राज्ञे दण्डञ्च द्विगुणम्परम्” इति। अत्र निर्णेतृनाह नारदः “वेश्याःप्रधाना यास्तत्र कामुकास्तद्गृहोषिताः। तत्समुत्थेषु कार्य्येषु निर्णयं संशये विदुः” इति।

**वेतस** पु० अज–असुन् तुक् च वीभावः। (वेत) वृक्षभेदे अमरः। स्त्रीत्वमपि शब्दच० तत्र गौरा० ङीष्।

**वेतसाम्ल** पु० वेतस एव अम्लः। अम्लवेतसे जटा०।

**वेतस्वत्** त्रि० वेतसाः सन्त्यत्र भूम्ना वेतस+ड्मतुप्। बहुवेतसयुक्ते देशे अमरः।

**वेताल** पु० अज–विच् वीभावः तल–घञ् कर्म०। १मन्त्रविशेषे २भूताधिष्ठितशवभेदे अमरः ३शिवानुचरे भैरवभेदे कालिकापु०। ४द्वारपाले च शब्दर०।

**वेतालभट्ट** पु० विक्रमादित्यसभास्थे नवरत्नान्तर्गते कविभेदे

**वेत्तृ** त्रि०विद–तृच्। १ज्ञातरि २वोढ़रि ३लब्धरि च राजनि०

**वेत्र** पु० अज–त्रल् वीभावः। (वेत) वेतसवृक्षे राजनि०।

**वेत्रकीय** त्रि०वेत्र+छ–कुक् च। १वेत्रसमूहे २तद्युक्तदेशादौ च त्रि० कौ०। [यष्टिधारमात्रे त्रि०।

**वेत्रधर** पु० वेत्रं धरति धृ–अच्। १द्वारपाले हला० २वेत्र-

**वेत्र(त्रा)वती** स्त्री वेत्रा बाहुल्येन सन्त्यस्याः मतुप् मस्य वः वा दीर्घः। १मालवदेशस्थे नदीभेदे “शरावती वेत्रवती चन्द्रभागा सरस्वती”। २वृत्रासुरमातरि वराहपु०।

**वेत्रासन** न०वेत्रनिर्मितमासनम्। वेत्रनिर्मिते आसने (मोड़ा)

**वेत्रासुर** पु० सिन्धुद्वीपात्मजेऽसुरभेदे वराहपु०।

**वेथ** याचने भ्वा० आत्म० द्वि० सेट् ऋदित् चङि न ह्रस्वः। वेथते अवेथिष्ट।

**वेद** पु० विद–अच् घञ् वा। १विष्णौ विष्णु सं०। २ज्ञाने ३शास्त्रज्ञाने तत्साधने धर्मब्रह्मप्रतिपादके मन्त्रब्राह्मणात्मके ग्रन्थभेदे ४शास्त्रोक्ते चरित्रे च मेदि०। ५यज्ञाङ्गे नानाग्रन्था० ६कुशमुष्टिकृते पदार्थभेदे “वेदं कृत्वा वेदिं कुर्य्यात्” श्रुतिः वेदयति विद–अच् णिच्–अच् विद-अच् वा। ७ज्ञापके ८ज्ञारि च त्रि० “वेदोऽसि येन त्वं देव! वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः” यजु० २।२१ “पत्नी वेदं प्रयच्छति वेदोऽसीति “हे कुशमुष्टिनिर्मितपदार्थ! त्वं वेदोऽसि ऋगाद्यात्मकोऽसि यद्वा वेत्तीति वेदः ज्ञातासि। देवेभ्यो देवानां वेदोऽभवः ज्ञापकोऽभूः” कर्क०। तल्लक्षणञ्च अपौरुषं वाक्यं वेद इति मीमांसकाः। पौरुषेयत्वे पूर्वपक्षं दूषयित्वाऽपौरुषेयत्वं माधवेनोपन्यस्य समर्थितं यथा “सम्प्रदायवलेन सम्यक्परोक्षानुभवसाधनं वेद इति” वेदलक्षणस्य मन्वादिस्मृत्यादावतिव्याप्तिमाशङ्क्य “अपौरुषेयत्वे सतीति विशेषणाददोष इति चेत् वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात् शरीरधारिजीवनिर्मितत्वाभावादपौरुषेयत्वमिति चेत् “सहस्रशीर्षा पुरुषः” इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात्। कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वं विवक्षितमिति चेत् न जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। “ऋग्वेद एवाग्नेरजायत, यजुर्वेदो वायोः, सामवेद आदित्यादिति श्रुतेः” (ईश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यम्)। ततः मन्त्रब्राह्मणात्मकत्वं वेदलक्षणमुक्त्वा “मन्त्रब्राह्मणयोर्वेदनामधेयम्” इत्यापस्तम्बवचनं प्रमाणतयोपन्यस्तं ततश्च मन्त्रलक्षणमुक्त्वा तदितरत् ब्राह्मणमित्युक्तम्। तत्रैवोत्तरत्र नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलम्भकवाक्यवदप्रामाण्यं स्यात् पौरुषेयत्वं च १पादे पूर्वपक्षत्वेन जैमिनिरसूत्रयत् यथा “वेदांश्चैके सन्निकर्षं पुरुषाख्येति” सू० “एके वादिनो वेदान् प्रति सन्निकर्षं मन्यन्ते। यथा रघुवंशादयः कालिदासप्रणीता इदानीन्तनास्तथा वेदोऽपि न तु वेदा अनादयः अतएव वेदकर्तृत्वेन पुरुषा आख्यायन्ते वैयासिकं भारतं वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायन्ते तथा काठकं कौथुमं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वात् वेदाः पौरुषेयाः। ननु नित्यानामेव सतां वेदानामुपाध्यायसम्प्रदायप्रवर्त्तकत्वेन कठकादिसमाख्या स्यादित्याशङ्क्य युक्त्यन्तरं सूत्रयति “अनित्यदर्शनाच्चेति” सू० अनित्याजननमरणवन्तो ववरादयो वेदार्थाः श्रूयन्ते “ववरः प्रावहणिरकामयत” कुसुरुविन्द

ब्दोद्घात्तकिरणमयतेति" तथा श्रुति ववरादिभ्यः पूर्वम-भावादनित्या वेदाः । विमतं वेदवाक्यं पौरुषेयं वाक्यत्वात् कालिदासादिवाक्यवत् इत्यनुमानसूचकसूत्रकारः" इति पूर्वपक्षं सिद्धान्तयति । "उक्तं तु शब्दपूर्वत्वम्" सू० "तु शब्दो वेदानामनित्यत्वं वारयति । शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वम् प्राचीनैरुक्तमेवेत्युक्तम् । "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्यत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसम्बन्धानञ्च नित्यत्वं प्रतिज्ञाय उत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितम । का तर्हि काठकाद्याख्याया गतिरित्याशङ्क्य संप्रदायप्रवर्त्तनात् सेयमुपपद्यते" इत्युत्तरसूत्रयति "आख्याः प्रवचनादिति" सू० "अनित्यसमाख्ययिकायागतिः (इयं प्रवचनरूपा संप्रदायप्रवर्त्तनेत्यर्थः") ववराद्यनित्यदर्शनं यदुक्तं तस्य किमित्युत्तरमित्याशङ्कयायामाह "परं तु श्रुतिसामान्यमात्रम्" सू० यत्परं ववरादिकं तत् तच्छब्दसामान्यमेव । न तु मनुष्यो ववरनामकोऽत्र विवक्षितः ववरध्वनियुक्तप्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात् । पूर्वपक्षोक्तस्य वाक्यत्व हेतोः पराहतेः । तस्मान्नास्ति वेदस्य पौरुषेयत्वम् । अत्र संग्राहकश्लोकौ "पौरुषेयं न वा वेदवाक्यं स्यात् पौरुषेयता । काठकादिसमाख्यानात् वाक्यत्वाच्चान्यवाक्यवत् । समाख्यानं प्रवचनात् वाक्यत्वं तु पराहतम् । तत्कर्त्रनुपलम्भेन स्यात्ततोऽपौरुषेयता" । ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्य्यत्वं सूत्रितं "शास्त्रयोनित्वादिति" । ऋग्वेदादिशास्त्रकारणत्वात् ब्रह्म सर्वज्ञमिति सूत्रार्थः ( तदेतस्य महाभूतस्य निःश्वसितं यदृग्वेदोयजुर्वेद इत्यादि" श्रुतिः "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा" स्मृतिश्चात्र मूलम् ) वाढं नैतावता पौरुषेयत्वं भवति मनुष्यनिर्मितत्वाभावात् । ईदृशमपौरुषेयत्वमभिप्रेत्य व्यवहारदशायामाकाशादिवन्नित्यत्वं बादरायणेनैव देवताधिकरणे सूत्रितम् "अतएव च नित्यत्वमिति" । वेदा०प० पौरुषेयत्वापौरुषेयत्वे अन्यथा निरुक्ते "यथा ननु क्षणिकत्वाभावेऽपि वियदादिवदादिमत्त्वेन परमेश्वरकर्त्तृकतया पौरुषेयत्वादपौरुषेयत्वं वेदानामिति तव सिद्धान्तोभज्येतेति चेन्न न तावत्पुरुषेणोच्चार्य्यमाणत्वं पौरुषेयत्वं गुरुमतेऽपि पौरुषेयत्वापत्तेः ( पाठप्रमान वेदानामिति शेषः ) नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वं नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मादादीनां सिद्धसाधनापत्तेः किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं तथा च सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्ध वेदसमानुपूर्वीकं वेदं विरचितवान् न तु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदस्य, भारतादीनान्तु सजातीयोच्चारणमनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम्" । शब्दचिन्तामणिकृता तु वेदलक्षणमन्यथा निरूप्य पौरुषेयत्वमीदृशमेव समर्थितं यथा "अथ वेदः पौरुषेयो वाक्यत्वात् भारतादिवत् इति चेत् कोवेद अनुगतधर्म्माभावेन तस्य शाखास्तु नानार्थत्वात् तथा हि न सुख्यवेदप्रयोगविषयो वेदः सुख्यार्थाकथनात् नापि शाखासमुदायः तस्य वेदनिरूप्यत्वात् समुदायस्याप्रतिपादकत्वेन वाक्यत्वासिद्धेः । नापि स्वर्गकामो यजेतेत्यादिवाक्यं स्मृतिभारतादेरपि तथात्वात्" इत्यादिवेदलक्षणे पूर्वपक्षमुक्त्वा पौरुषेयत्वसाध्ये तत्राह "पौरुषेयत्वं न तदर्थधीजन्यत्वं तदुच्चारणधीप्रभवत्वं वा अध्यापकाध्येतृधीजन्यत्वेन सिद्धसाधनात् स्वतन्त्रपुरुषप्रणीतजातीयत्वं यदि साध्यं तदाद्यभारते स्मृतौ च वाक्यत्वमनैकान्तिकम्" इत्यादिना । सत्यकृतसूक्तं यथा "शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वं वेदत्वम् । ईश्वरप्रमाया अजन्यत्वात् वेदार्थस्यानुमानविषयत्वेऽप्यनुमानादेर्वेदोपजीवकतया स्मृतीनां भारतादिभागस्य च वेदसमानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदादर्थं प्रतीत्यैव तत्प्रणयनात्" ( अग्निर्हिमस्य भेषजमित्यादिवेदवाक्यसंग्रहाय सत्यन्तं लक्षणाप्रविष्टं सत्यन्तं तु अदृष्टैकतावाक्यज्ञापनार्थमिति बोध्यम् ) । मथुरानाथेनैतद्विवृतं तत्र द्रष्टव्यम् । साध्यं च पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वमिति निर्णीतमधिकं तत्र द्रष्टव्यम् ।

वेदाश्च चत्वारः तेषां शाखाविभागश्चरणव्यूहे उक्तः तत्र ऋग्वेदशाखाविभागः ऋग्वेदशब्दे १४११पृ० दर्शितः । "यजुर्वेदस्य षडशीतिर्भेदा भवन्ति । तत्र चरकाणां द्वादश भेदा भवन्ति । चरकाः१ आह्वरकाः२ कठाः३ प्राच्यकठाः४ कपिष्ठलकठाः५ औपमन्यवाः६ आरक्षकठाः७ चारायणीयाः८ पारायणीयाः९ वार्त्तान्तवेयाः१० श्वेताश्वतराः११ (श्वेताश्वतरा इति वा पाठः) । मैत्रायणीयाः१२ इति । तत्र मैत्रायणीयानां सप्त भेदा भवन्ति । मानवाः१ दुन्दुभाः२ चैकेयाः३ वाराहाः४ हा-

रिद्रवेयाः५ श्यामाः६ श्यामायणीयाः७श्चेति। तेषामध्ययनम् अष्टौ यजुःसहस्राण्यधीत्य शाखापारो भवति। तान्येव द्विगुणान्यधीत्य पदपारो भवति। तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति। षडङ्गान्यधीत्य षडङ्गविद्भवति। शिक्षा१ कल्पो२ व्याकरणं३ निरुक्तं४ छन्दो५ ज्योतिषं६मित्यङ्गानि। तत्र प्राच्योदीच्यां नैरृत्यां निरृत्यः। तत्र वाजसनेयानां सप्तदश भेदा भवन्ति। जाबालाः१ बौधेयाः२ काण्वाः३ माध्यन्दिनाः४ शातातपीयाः५ तापायनीयाः६ कापालाः७ पौण्ड्रवत्साः८ आवटिकाः९ परमावटिकाः१० (परमावटिकापि पाठः)। पाराशरीयाः११ वैनेयाः१२ औधेयाः१४ गालवाः१५ वैजवापाः१६ कात्यायनीयाश्च१७। प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि। उपज्योतिषम्। शाङ्खलक्षणम्। प्रतिज्ञानवाक्यम्। परिसंख्याचरणम्। श्राद्धकल्पः। प्रवराध्यायश्च। शस्त्रम्। क्रतुः। संख्यानः। आगमः। यज्ञपार्श्वः हौत्रकम्। (पारव्याहौत्रकमपि पाठः)। पशवः। उक्थानि। कूर्मलक्षणमित्यष्टादशपरिशिष्टानि। द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके। इत्युक्तं परिसंख्यातमेतत् सकलं शुक्रियम्। अन्यास परिसंख्याता ब्राह्मणस्य चतुर्गुणम्। आदावारभ्य वेदान्तं ब्रह्मव्याहृतिपूर्वकम्। वेदमध्याय एतेषां होमान्ते तु समारभेत्"। तत्र तैत्तिरीयकाणां द्विभेदा भवन्ति। औख्याः१ (खमध्योऽपि पाठः)। खाण्डिकेयाश्चेति२। तत्र खाण्डिकेयानां पञ्च भेदा भवन्ति। आपस्तम्बी१ बौधायनी२ सत्याषाढी३ हिरण्यकेशी४ औधेयाश्चेति५ (औधेयी च पाठः)। तत्र कठानामुपगानविशेषाः। चतुश्चत्वारिंशदुपग्रन्थाः। मन्त्रब्राह्मणयोर्वेदस्त्रिगुणो यत्र पठ्यते। यजुर्वेदः स विज्ञेयः शेषाः शाखान्तराः स्मृताः"।

सामवेदस्य किल सहस्रभेद आसीत्। अनध्यायेष्वधीयानास्ते शतक्रतुवज्रेणाभिहताः प्रनष्टाः। तेषां प्रवर्त्त्यास्यासुरायणीया वासुरायणीया वार्त्तान्तवेयाः प्राञ्जला ऋग्वर्णभेदाः प्राचीनयोग्या ज्ञानयोग्या राणायनीयाश्चेति। तत्र राणायनीयानां नव भेदा भवन्ति। राणायनीयाः शाट्यानीयाः पारायणीयाः सात्वलाः। (सत्यमुद्गा इति वा पाठः)। मौद्गलाः। (इति तु भाष्ये नास्ति)। खल्वलाः। महाखल्वलाः लाङ्गलाः। कौथुमाः जैमिनीयाश्चेति। तेषामध्ययनम् अष्टौ सामसहस्राणि सामानि च चतुर्दश अष्टौ शतानि दशोत्तरे दशसप्त च बालखिल्याः सशुपर्णग्रैष्य। एतत् सामगणं स्मृतम्। अथर्ववेदस्य नव भेदा भवन्ति। पैप्पलाः१। दान्ताः२। प्रदान्ताः३। स्नाताः४। स्नौताः५। ब्रह्मदावलाः६। शौनकी७। देवदर्शती८। चरणविद्याः९श्चेति। (दाता प्रदाता औता ब्रह्मदीपशी वेदशी इति भाष्ये नामान्तरम्) तेषामध्ययनं पञ्च कल्पानि भवन्ति। नक्षत्रकल्पो विधानकल्पो विधिविधानकल्पः संहिता शान्तिकल्पश्चेति। सर्वेषामेव वेदानामुपवेदा भवन्ति। ऋग्वेदस्यायुर्वेदः। यजुर्वेदस्य धनुर्वेद उपवेदः। सामवेदस्य गान्धर्ववेद उपवेदः। अथर्ववेदस्य शस्त्रशास्त्राणि भवन्ति"। "यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः। वैशम्पायननामासौ व्यासशिष्यश्चकार वै। शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात्। याज्ञवल्क्यस्तु तस्याभूद् ब्रह्मरातसुतो द्विजः। शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा। ऋषियोऽद्य महामेरोः समाजे नागमिष्यति। तस्य वै सप्तरात्रन्तु ब्रह्महत्या भविष्यति। पूर्वमेव मुनिगणैः समयोऽयं कृतो द्विज!। वैशम्पायन एकस्तु तं व्यतिक्रान्तवांस्ततः। स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत्। सशिष्यानाह भोः शिष्याः ब्रह्महत्यापहं व्रतम्। चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा। अथाह याज्ञवल्क्यस्तं किमेभिर्भगवन्! द्विजैः। क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम्। ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिम्। मुच्यतां यत् त्वयाऽधीतं मत्तो विप्रावमन्य च। निस्तेजसो वदस्येतान् यस्त्वं ब्राह्मणपुङ्गवान्। तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा। याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम्। ममाप्यलं त्वयाधीतं यन्मया तदिदं द्विज!"। श्रीपराशर उवाच "इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः। छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः। यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज। जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः। ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः। चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम!। याज्ञवल्क्योऽपि मैत्रेय! प्राणायामपरायणः। तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्ततः"। श्रीयाज्ञवल्क्य उवाच "नमः सवित्रे

द्वाराय मुक्तेरमिततेजसे। ऋग्यजुःसामभूताय त्रयीधाम्नवते नमः"। श्रीपराशर उवाच "इत्येवमादिभिस्तेन स्तूयमानः स वै रविः। वाजिरूपधरः प्राह व्रियतामभिवाञ्छितम्॥ याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम्। यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ" श्रीपराशर उवाच "एवमुक्तो ददौ तस्मै यजूंषि भगवान् रविः। अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः। यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम!। वाजिनस्ते समाख्याताः सूर्य्योऽश्वः सोऽभवद्यतः। शाखाभेदास्तु तेषां वै दश पञ्च च वाजिनाम्। काण्वाद्याः सुमहाभाग! याज्ञवल्क्यप्रवर्त्तिताः" विष्णुपु० ३ अंशे ५ अ०। सामवेदस्य संहिता यथा "सामवेदतरोः शाखा व्यासशिष्यः स जैमिनिः। क्रमेण येन मैत्रेय! बिभेद शृणु तन्मम। सुमन्तुस्तस्य पुत्त्रोऽभूत् सुत्वानस्तस्य वै सुतः। अधीतवन्तावेकैकां संहितां तौ महामती। सहस्रसंहिताभेदं सुकर्म्मा तत्सुतस्ततः। चकार तञ्च तच्छिष्यौ जगृहाते महाव्रतौ। हिरण्यनाभः कौशल्यः पौष्यञ्जिश्च द्विजोत्तम!। उदीच्याः सामगाः शिष्यास्तस्य पञ्चशताः स्मृताः। हिरण्यनाभात्तावत्यः संहिता वै द्विजोत्तम!। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः। लोकाक्षिः कुथमिश्चैव कुषीदिर्लाङ्गलिस्तथा। पौष्यञ्जिशिष्यास्तद्भेदैः संहिता बहुलीकृताः। हिरण्यनाभशिष्यश्च चतुर्विंशतिसंहिताः। प्रोवाच कृतिनामासौ शिष्येभ्यः सुमहामतिः। तैश्चापि सामवेदोऽसौ शाखाभिर्बहुलीकृतः"। अथर्ववेदस्य संहिता यथा। "अथर्व्वाणमथो वक्ष्ये संहितानां समुच्चयम्। अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्। वेददर्शस्य शिष्यास्तु मोदो ब्रह्मबलिस्तथा। शौल्कायनिः पिप्पलादस्तथान्यो मुनिसत्तमः। पथ्यस्यापि त्रयः शिष्याः कृता यैर्द्विज संहिताः। जाजलिः कुमुदादिश्च तृतीयः शौनको द्विज। शौनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे। द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने। सैन्धवो मुञ्जकेशश्च भिन्दन् वेदं द्विधा पुनः। नक्षत्रकल्पो वेदानां संहितानां तथैव च। चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः। श्रेष्ठास्त्वाथर्व्वणामेते संहितानां विकल्पकाः"। विष्णुपु० ३ अंशे ६ अ०।

हेमाद्रि दा०ख० देवीपु० ७ अ० वेदविभागोऽन्यथोक्तो यथा "किं वेदरूपं सामञ्च उपाङ्गसंख्याभेदतः। अङ्गानि चैव वेदानां तन्मे ब्रूहि सनातन!"। ब्रह्मोवाच "ओंकारप्रभवा वेदा गायत्री वेदसम्भवा। षडङ्गास्ते समाख्याता सहोपाङ्गास्तथैव च। छन्दोलक्षणसंयुक्ता मातृकागर्भजाः स्मृताः। एक एव भवेद्वेदश्चतुर्वेदः पुनः कृतः। शाखार्थमल्पयुक्तानां ग्रहणायातिविस्तरात्। संविभक्ता मया वत्स! ऋग्यजुःसामाथर्वकाः। तत्र भेदास्तु ऋग्वेदे दश चैव प्रकीर्त्तिताः। आस्तयाः सांख्यचर्चाश्च आवका चर्चकास्तथा। आरणीयाव क्रमापाः षट्क्रमाः षडृतुक्रमाः। दशकाश्चेति समासेन पुनरेकैव पारणा। शाखाश्च त्रिविधा भूप! शाकला-बाष्क-माण्डुकाः। तेषामध्ययनं प्रोक्तं मण्डलानि च सप्ततिः। चर्च्चानां वरसङ्ख्या तु चतुर्विंशच्छतानि च। ऋचां दश सहस्राणि ऋचां पञ्च शतानि च। ऋचामशीतिः पादश्च एतत् पारणमुच्यते। ऋग्वेदे तु भवेत्संख्या यजुर्वेदस्य श्रूयताम्। षडशीतिर्विभेदेन यथा भिन्नाः शिवात्मजा। दशधा चरकास्तत्र करकाहारिद्रवीयाः, कठाः प्राच्यकठश्चैव कपिष्ठलकठास्तथा। नारायणीयाः श्वेताश्च श्वेताश्वतरमैत्रायणाः। पुनः सप्त विभेदेन मैत्रायण्यः प्रकीर्त्तिताः। मानवा दुन्दुभा वाराहाः छागेया हारिद्रवीयाः, श्यामाः श्यामायनीयाश्च तेषामध्ययनमुच्यते। अष्टादश सहस्राणि पाठा वेदविदोऽविदन्। द्विगुणं पदपारीयास्त्रिगुणं क्रमपारगाः। षडङ्गानि यदाधीते स षडङ्गविदुच्यते। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोज्योतिषम्। षडङ्गानि भवन्त्येतान् उपाङ्गानि शृणुष्व भोः। प्रतिपदमनुपदं छन्दो भाषासमन्वितम्। मीमांसा-न्यायतर्कश्च उपाङ्गाः परिकीर्त्तिताः। परिशिष्टाश्च संख्याता अष्टादश शृणुष्व तान्"। यूपलक्षणं छागलक्षणं प्रतिष्ठानुवाकसङ्ख्या-चरणव्यूह-श्राद्ध-कल्पसूत्राणि परिषदृग्यजुरिष्टकापूरणं प्रवराध्यायोक्थशास्त्रं क्रतुसंख्या निगमा यज्ञपार्श्वहोतकम्। व्रतं प्रसवोत्थानकूर्मलक्षणसंयुतम्। कथिताः परिशिष्टास्तु ह्यूनविंशतिसंख्यया। कठानां पुनरप्यन्यांश्चत्वारिंशच्चतुर्य्युतान्। प्राच्योदीच्या निरुक्ताश्च वाजसनेयास्तु पञ्च च। दशभेदविभिन्नाश्च द्रष्टव्या मुनिपुङ्गव! जाबालाबौधेयाःकाण्वामाध्यन्दिनाश्च शापेयाः। सुपायिनः कपालाख्याः पौण्ड्रवः रम्यादिकाः। परमारविकाः पाराशरा

कठाबौधायनीयाः । अयोध्या अयोध्येयाश्च तेषामध्ययनानि च । द्विसहस्त्रे शतन्यूने वेदे वाजसनेयके । ऋग्गणार्यं प्रसंख्यातमतोऽन्यानि यजूंषि च”। एतत्प्रमाणं यजुषां हि केवलम् “सखिलं साक्रियं परिसंख्यातं ब्राह्मणम्। चतुर्गुणन्तु जानीयात्तैत्तिरीया द्विधा पुनः । ऋचेयाः खाण्डिकेयाश्च खाण्डिकाः पञ्चधा पुनः । कालेया बौधायनीया हिरण्यकेशाश्चैव च। भारद्वाजाश्चतस्त्रश्च तेषां भेदाः प्रकीर्त्तिताः । अध्ययनं मौलिकञ्चैव प्रवचनीयं तथापरम् । सामवेदस्तु विज्ञेयः सहस्रभेदः पुरा । अनध्यायेष्वधीयानाः तदा इन्द्रेण धीमता । वज्रेण निहताः शेषांस्तान्वक्ष्ये शृणु सत्तम !। राणायनीयाः कौथुमास्तत्र भेदान् पुनः शृणु । राणायनीयाः सप्तैव सुधान्यास्तपतांवर । कालवेया महाकालवेयाश्चाह्नलवेयुताः । कौथुमानामपि सप्त असुरावानराश्चयाः । प्रजालावैनस्त्याश्च परियोग्याः परिकायनाः । अध्ययनमपि तेषान्तु यथावत् कथितं शृणु । अष्टौ सामसहस्राणि सामानि च चतुर्दश । अष्टौ शतानि नवतीः दश सवालखिल्यकाः । सरहस्याश्च प्रख्याश्च एतं सामगणं विदुः । अथो अथर्ववेदस्य नव भेदा भवन्ति हि । पिप्पलादा वर्णदाश्च भूतायनाः कातयस्तथा । अञ्जला ब्रह्मवेदाश्च शौनकी कनखी तथा । वेदस्पर्शौरविद्या तेषामध्ययनं शृणु” । पञ्चकल्पा भवन्ति “नक्षत्रकल्पोवैतानः संहिताविधिः आङ्गिरसम् । शान्तिकल्पश्च अथर्वणो भवन्ति ह । ऋग्वेदस्यात्रेयं गोत्रं वासुदेवं विदुर्बुधाः । काश्यपञ्च यजुर्वेदं रुद्रदेवन्तु तं विदुः । सामवेदोऽपि गोत्रेण भारद्वाजः पुरन्दरम् । अधिदेवं विजानीयात् वैतानन्तु अथर्वणः” ।

**वेदगर्भ** पु० वेदोगर्भे यस्य । सर्ववेदस्य प्रथमं कर्त्तरि १हिरण्यगर्भे २विप्रे च हेमच० । ३विष्णौ विष्णुस० ।

**वेदन** न०विद–ल्युट् । १ज्ञाने २सुखदुःखाद्यनुभवे ३विवाहे च “वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने” इति मनुः । युच् । वेदनापि अत्रार्थेषु स्त्री । सा च बौद्धमते स्कन्धपञ्चकान्तर्गतस्कन्धभेदे बौद्धशब्दे दृश्यम् ।

**वेदनिन्दक** पु० ६त० । १नास्तिके जटा० २बौद्धे च ।

**वेदपारग** पु० वेदानां पारमन्तं सीमां गच्छति गम–ड । समस्तवेदाध्यायिनि । [वेदस्नातकत्वात्तथात्वम् ।

**वेदमातृ** स्त्री ६त० गायत्र्यां मन्त्रभेदे तस्याः समाम्नायपाठेन

**वेदवत्** पु० वेदाऽभ्यसनत्वेनास्त्यस्य मतुप् मस्य वः । १वेदाभ्यासरते द्विजे । २कुशध्वजराजकन्यायां सीताविग्रहपूर्वाभिभूतायां स्त्री । “कृते युगे वेदवती कुशध्वजसुता शुभा । त्रेतायां रामपत्नी सा सीतेति जनकात्मजा । तच्छाया द्रौपदी देवी द्वापरे द्रुपदात्मजा । त्रिहायणीति सा प्रोक्ता विद्यमाना युगत्रये” ब्रह्मवै०प्र०१२अ० ।

**वेदवास** पु० ६त० । ब्राह्मणे तस्य तत्पाठतदुक्ताचाराश्रयत्वात् तथात्वम् वेदावासादयोऽप्यत्र । [दक्षे त्रि० ।

**वेदविद्** पु० वेदं वेत्ति विद–क्विप् । १विप्रे विष्णुस० २वे-

**वेदव्यास** पु० वेदान् व्यस्यति विभिन्नशाखत्वेन पृथक् करोति वि+अस–अण् । पराशरपुत्रे सत्यवतीगर्भजे १मुनिभेदे तथा भूतेषु अन्येषु २मुनिषु च ।

युगभेदे तद्भेदाश्च विष्णुपु० ३अं० ३अ० उक्ता यथा पराशर उवाच “यस्मिन् मन्वन्तरे व्यासा ये ये तांस्तान् निबोध मे । यथा च भेदः शाखानां व्यासेन क्रियते मुने !। अष्टाविंशतिकृत्वो वै वेदा व्यस्ता महर्षिभिः । वैवस्वतेऽन्तरे तस्मिन् द्वापरेषु पुनःपुनः । वेदव्यासा व्यतीता ये अष्टविंशतिसत्तमाः । चतुर्द्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः । द्वापरे प्रथमे व्यस्ताः स्वयं वेदाः स्वयम्भुवा१। द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः२ । तृतीये चोशना३व्यासश्चतुर्थे तु बृहस्पतिः४ । सविता५ पञ्चमे व्यासो मृत्युः६ षष्ठे स्मृतः प्रभुः । सप्तमे च तथैवेन्द्रो७ वसिष्ठश्चाष्टमे८ स्मृतः । सारस्वतश्च नवमे९ त्रिधामा१० दशमे स्मृतः । एकादशे च त्रिवृषो११ भरद्वाज१२स्ततः परम् । त्रयोदशे चान्तरीक्षो१३ धर्मी१४ चापि चतुर्दशे । त्रय्यारुणः१५ पञ्चदशे षोडशे तु धनञ्जयः१६ । कृतञ्जयः१७ सप्तदशे ऋणज्यो१८ऽष्टादशे स्मृतः । ततो व्यासो भरद्वाजो१९ भरद्वाजात्तु गौतमः२० । गौतमादुत्तरं व्यासो हर्य्यात्मा२१ योऽभिधीयते । अथ हर्य्यात्मनो वेणः स्मृतो वाजश्रवास्तु२२ यः । सोमो मुख्यायनस्तस्मात् तृणविन्दु२३रिति स्मृतः । ऋक्षोऽभूद्भार्गवस्तस्मात् वाल्मीकि२४र्योऽभिधीयते । तस्मादस्मत् पिता शक्तिः२५ व्यासस्तस्मादहं२६(पराशरः) मुने ! । जातूकर्णो२७ऽभवन्मत्तः (पराशरादनन्तरम्) कृष्णद्वैपायन२८स्ततः । (ततो जातूकर्णान्तरम् अष्टाविंशतितमे युगे)“अष्टाविंशतिरित्येते वेदव्यासाः पुरातनाः । एकोवेदश्चतुर्द्धा तु तैः कृतो द्वापरादिषु । भविष्ये द्वापरे चैव द्रौणिर्व्यासो भविष्यति । व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने”!

**वेदस्** पु० विद–असुन् । वेत्ति । जातवेदाः विश्ववेदाः ।

**वेदाङ्ग** न० वेदस्याङ्गमिव। "शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु" इत्युक्तेषु शिक्षादिषु षट्सु शास्त्रेषु। तेषामङ्गविशेषरूपत्वं शिक्षायामुक्तं यथा

"छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते"।

**वेदादि** पु० वेदस्यादिरिव तत्पाठे प्रथमोच्चार्य्यमाणत्वात्। प्रणवे

**वेदाधिप** पु० ६त०। "ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपो भृगुः। सामवेदाधिपो भौमः शशिजोऽथर्ववेदपः" इत्युक्तेषु जीवादिषु २विष्णौ च विष्णुस०।

**वेदान्त** पु० ६त०। वेदशिरोभागे ब्रह्मप्रतिपादके उपनिषद्रूपे १ग्रन्थभेदे तदुपकारके २शारीरकसूत्रभाष्यादौ च उत्तरामीमांसाशब्दे १०९७पृ० दृश्यम्। शारीरकसूत्रस्य बहुभिराचार्य्यैः स्वस्वमतानुसारेण व्याख्यातं तत्र रामानुजपूर्णप्रज्ञशब्दयोस्तत्तन्मतं प्रदर्शितं शाङ्करमतानुसारिमतस्य सिद्धान्तबिन्दुप्रदर्शितस्य सङ्क्षेपोऽत्र प्रदर्श्यते

"वेदान्तिमते सामान्यतः द्विविध एव पदार्थः दृग्दृश्यश्च तत्रैव सर्वपदार्थान्तर्भावात्। तत्र दृक्पदार्थ आत्मा। स च सर्वदैकरूपोऽप्यौपाधिकभेदात् त्रिविधः ईश्वरः जीवः साक्षी चेति। तत्र कारणीभूताज्ञानोपाधिरीश्वरः। अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानोपहितो जीवः। जीवेश्वरानुगतसर्वानुसंधायि चैतन्यं साक्षी। तत्रेश्वरोऽपि त्रिविधः स्वोपाधिभूताविद्यावृत्तिसत्त्वादिगुणत्रयभेदेन विष्णुब्रह्मरुद्रभेदात्। तत्र कारणीभूतसत्त्वगुणावच्छिन्नो विष्णुः पालयिता। तथा रज उपहितो ब्रह्मा स्रष्टा। हिरण्यगर्भस्तु महाभूतकारणत्वाभावान्न ब्रह्मा। तथापि स्थूलभूतस्रष्टृत्वेन क्वचिद् ब्रह्मेत्युपचर्य्यते। तथा तम उपहितो रुद्रः संहर्त्ता। एवञ्चैकस्यैव तस्य चतुर्भुजचतुर्मुखाद्याः पुमाकाराः श्रीभारतीभवान्याद्याश्च स्त्र्याकारा मत्स्यकूर्मादयोऽप्यवतारा लीलयैवाविर्भवन्ति। तथा जीवोऽपि त्रिविधः स्वोपाधिजाग्रदाद्यवस्थात्रयभेदेन विश्वतैजसप्राज्ञभेदात्। तत्राविद्यान्तःकरणस्थूलशरीरावच्छिन्नो जाग्रदभिमानी विश्वः। स एव स्थूलशरीराभिमानरहित उपाधिद्वयोपहितः स्वप्नावस्थाभिमानी तैजसः। अयमेव शरीरद्वयान्तःकरणोपाधिरहितोऽन्तःकरणसंस्कारावच्छिन्नोऽविद्यामात्रोपहितः सुषुप्त्यवस्थाभिमानी प्राज्ञः। साक्षी तु सर्वानुसन्धाता सर्वानुगतस्तुरीयाख्य एकविध एव।

अविद्यातत्कार्य्यात्मकप्रपञ्चो दृश्यपदार्थः तस्यापारमार्थिकत्वेऽपि व्यावहारिकत्वाभ्युपगमाच्च स्वप्नादिवदतात्त्विकत्वम्। दृश्योऽपि त्रिविधः अव्याकृतमूर्त्तामूर्त्तभेदात्। तत्र चिदाभाससहिताऽविद्या मूर्त्तामूर्त्तप्रपञ्चस्य बीजशक्तिरनादिरव्याकृतमित्युच्यते। इयञ्चाव्याकृताख्याऽविद्येश्वरोपाधिः। सा च स्वयं जड़ाप्यजड़ेन चिदाभासेनोज्ज्वलिता पूर्वपूर्वसंस्कारजीवकर्मभ्यां प्रयुक्ता सती शब्दस्पर्शरूपरसगन्धाश्रयाण्याकाशवायुतेजोजलपृथिव्यात्मकानि पञ्च सूक्ष्ममहाभूतानि जनयति। तत्र पूर्वपूर्वभूतभावापन्नाया एवाविद्याया उत्तरोत्तरभूतं प्रति कारणत्वात् पूर्वपूर्वभूतगुणानामुत्तरोत्तरभूतेष्वनुप्रवेशात् भूतानामेकैकवृद्धीभूतगुणशालित्वं तथा आकाशस्य शब्दो गुणः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, जलस्य तानि रसश्च, पृथिव्यास्तानि गन्धश्चेति। आकाशस्यैव दिग्व्यवहारजनकत्वेन दिशो न पृथक्पदार्थता। कालस्य चिज्जड़सम्बन्धरूपतया तदाधाराविद्यात्मकतया च न पार्थक्यम्। तानि च सूक्ष्माणि पञ्च भूतानि अमूर्त्ताख्यानि कारणाभेदाच्च सत्त्वरजस्तमोगुणात्मकानि सत्त्वरजोंऽशप्राधान्येन ज्ञानक्रियाशक्त्यात्मकमेकं स्वच्छद्रव्यं चित्स्वरूपमिव मिलित्वा जनयन्ति। तच्च समस्तं द्रव्यं ज्ञानशक्तिप्राधान्येऽन्तःकरणं तदपि द्विविधं मनोबुद्धिभेदात् चतुर्विधं मनोबुद्ध्यहङ्कारचित्तभेदादित्यन्ये। तदेव क्रियाशक्तिप्राधान्ये प्राणः। स च पञ्चधा प्राणादिभेदात्। एवमेकैकभूतेभ्यो ज्ञानक्रियाशक्तिभेदात् प्रत्येकं ज्ञानकर्मेन्द्रियद्वयं जायते। यथाकाशात् श्रोत्रवाचौ, वायोस्त्वक्पाणी, तेजसश्चक्षुःपादौ, अद्भ्यो रसनापायू, पृथिव्या घ्राणोपस्थौ चोत्पद्येते। तत्र शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रत्वक्चक्षूरसनाघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि वचनादानगतिविसर्गानन्दजनकानि वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि। एतच्च सर्वं मिलित्वा सप्तदशकं लिङ्गशरीरम्। तच्च ज्ञानशक्तिप्राधान्येन समष्टौ हिरण्यगर्भ इति क्रियाशक्तिप्राधान्येन समष्टौ सूत्रमिति चोच्यते। अयं मूर्त्तपदार्थः कार्य्यत्वात्। समष्टिव्यष्टिजीवोपाधिसूक्ष्मभूतानि तु भोगायतनं शरीरं भोग्यविषयञ्चान्तरेण भोगं जनयितुमसमर्थानीति जीवकर्मप्रयुक्तानि तानि स्थौल्यार्थं पञ्चीकृतानि भ-

